स्तत्र प्रमाणमस्ति न वा, यद्यस्ति तर्हि व्याप्तिप्रमाणेनैव व्याप्यव्यापकयोरपि ग्रहणादविरोधेनादूषणत्वमित्यर्थः । द्वितीयं प्रत्याह * नचेदिति * प्रशिथिलमूलतया तर्काभासत्वमित्यर्थः । प्रमितत्वेप्येकस्यैव भेदापादकत्वात्स्यादेव दोषत्वमिति शङ्कते * अथेति * आश्रयत्वाश्रितत्वयोर्भिन्नाधिकरणत्वेऽपि प्रस्तुते किं स्यादित्यत आह * तदेति * प्रतियोगिभेदेनाश्रितत्वाश्रयत्वयोरेकस्मिन्नेव दर्शनाददोषत्वमिति परिहरति * मैवमिति * घटो रूपाद्याश्रयो मृदाश्रित इति द्वयस्यैकत्र दर्शनादित्यर्थः । एकप्रतियोगिकयोराश्रयत्वाश्रितत्वयोर्भेदापादकत्वादस्त्येव दोषत्वमिति शङ्कते * तदाश्रयेति * घटो मृदपेक्षयाऽऽश्रितो घटापेक्षया च मृदाश्रय इति भेदनियम इत्यर्थः । दूषयति * नेति तच्छब्दस्यानुगताभिधानत्वे भेदापादकत्वं तच्छब्दार्थस्यैव वस्तुन उभयत्वदर्शनाद्विशेषाभिधानत्वेऽननुगमाद्व्याप्त्यभाव एव, मिथःशब्दस्याऽपि परस्परमात्राभिधानत्वे इष्टापत्तिर्घटपटादिपरस्परस्य भेदस्वीकाराद्विशेषाभिधानेऽननुगम इत्यर्थः।

प्रकारान्तरेणात्माश्रयत्वस्य दोषत्वं शङ्कते ।

१३७ अन्यथाऽऽत्माश्रयत्वस्य दोषत्वशङ्कानिरासः ।

एतदाश्रयत्वादेतदाश्रितत्वाद्वा नैकत्वं स्यादिति वचनभङ्ग्याऽऽपाद्यमिति चेन्मैवम् । यद्येत देतदाश्रयादि स्यात्तदैतन्न स्यादिति ह्यापाद्यं, नचैतद्युक्तं धर्म्याऽऽपाद्ययो र्व्याहतत्वात् । नच वाच्यमापाद्यस्य प्रमाणबाध्यताऽनु-

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र वि० सं० (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। } (वेदान्तः) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपण-परम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् } (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः। आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः } (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादि-समविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः } (न्यायः) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्ट-सोमेश्वरविरचिता। } (मीमांसा) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। } (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः। } (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि–मीमांसादर्शनम्) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासं प्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् (वेदान्तः) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। } (वेदान्तः) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम्। } ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि। ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः। १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका। १३

(३०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ९

(३१) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः। २

(३२) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता। २

(३३) प्रस्थानरत्नाकरः। गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः। २

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस सिटी

June 1914.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 198.

श्रीहर्षप्रणीतम्

## खण्डनखण्डखाद्यम्।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्।
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम्।

द्राविड—श्रीलक्ष्मण—शास्त्रिणा परिशोधितम्।

SRÎ HARSHA'S

## KHANDANAKHANDAKHÂDYA,

WITH EXTRACTS FROM THE COMMENTARIES OF
'khandanaphakkikávibhajana' ( vidyâsâgari ) of
Ânandapurna

WITH EXTRACTS FROM THE COMMENTARIES OF
Chitsukha, Sânkara Misrâ and Raghunátha.

EDITED BY

PANDIT LAKSHMANA SÂSTRÎ DRÂVIDA,

PROFESSOR OF VEDÂNT,
*Govt. Sanskrit College & Lecturer of University Calcutta.*

FASCICULUS XIV.

*PUBLISHED & SOLD BY THE SECRETARY;*
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT.
BENARES.
AGENTS:- OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
AT THE VIDYÂ VILÂSA PRESS.
BENARES.

*Price Rupee one.*

॥ श्रीः ॥

–*–

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—१९८

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमाग्रिमं मूल्यम्—मुद्राः७आनकाः८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ...

---

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया–व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा १

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम्( वेदान्तः १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्णः ( न्यायः ) ... ... ... ... ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

कूलैवेति व्याघातादपि सा सम्भवन्ती न दोषमावहतीति, यत आपाद्यापादकयोः सामानाधिकरण्यानादरेऽतिप्रसङ्गः स्यादतो विपर्ययाऽपर्यवसायित्वमेवं स्या,देवं हि विपर्ययो वक्तव्यो, यन्नाम ? भवति चैतदेतत्तस्मान्नैतदाश्रय इति। नचैतदेतद् भवितुं शक्नोति एतदित्युद्दिष्टे धर्मिण्येतत्त्वविधानासम्भवादुद्देश्यविधेययोः प्रकारभेदस्याभावात्। न च प्रसङ्गमात्रमेतद्बाधायैवास्तु कृतमस्य विपर्ययपर्यवसानेनेति युक्तम्। स्वयमपि प्रसङ्गमूलस्य व्याप्तेरिष्टतया प्रसञ्जितनिषेधे तद्व्यतिरेकप्रामाणिकत्वस्यावश्यमन्तव्यत्वापत्तेः।

* एतदिति * विमतमेतस्माद्भिन्नमेवाश्रयत्वादेतदारम्भकद्रव्यवद्विमतमेतस्माद्भिन्नमेतदाश्रितत्वादेतदाश्रितरूपादिवदिति वा, एतदाश्रितत्वाश्रयत्वे भिन्नाधिकरणे वा एतदाश्रितत्वाश्रयत्वरूपत्वादेतदाश्रितकार्यगतधर्मद्वयवदिति वा स्वाभाविकैक्याभाव आपाद्येत इत्यर्थः। आपादनप्रकारं दर्शयन्परिहरति * मैवमिति * अस्त्वेवमापादनप्रकारस्तथापि का नो हानिरित्यत आह * नेति * कुतो न युक्तमित्यत आह * धर्मीति * एतत्घट इति धर्मिण ऐक्येन प्रमितत्वादेतत्घटो न स्यादिति भेदाभावे आपाद्यमानेपि विरुद्धसंसर्गव्याघात इत्यर्थः। नायमनिष्टप्रसञ्जने दोषः, सर्वत्र तर्के प्रमाणबाध्यस्यैवाऽऽपाद्यत्वादित्याशङ्क्याह * न

चेति * व्याघातः प्रमाणमप्रमाणं वा उभयथापि तस्माद्भवन्ती साऽऽपाद्यस्य बाध्यता न दोषमावहतीत्यर्थः। कुत इत्यत आह * यत इति * आश्रितत्वमाश्रयत्वं चापादकमनेकत्वमापाद्यं तयोरेकधार्मिनिष्ठत्वं अस्ति न वा,ऽस्ति चेदन्योन्यविरोधादापाद्यसिद्धिर्नास्ति, यदि यत्र क्वापि विद्यमानेनापादकेन यत्र क्वाप्यापादने सर्वेषामेकत्वाभिमतानामनेकत्वप्रसङ्ग इत्यर्थः। विपर्ययपर्यवसानासम्भवाच्चाभासतेत्याह * यत इति * तद्दर्शयितुं विपर्ययपर्यवसानाभिधानप्रकारं दर्शयति*एवमिति* एतत्घट एतत्घटो भवति तस्मान्नैतत्घटाश्रय इति विपर्ययपर्यवसानाभिधानमित्यर्थः। अस्तु तथा को दोष इत्यत आह * न चेति * (तत्वं वास्तवमित्यर्थः ) कुत इत्यत आह *एतदिति* असम्भवो वा कुत इत्यत आह *एतादित्युद्दिष्ट इति*

"सामानाधिकरण्यं हि रूपभेदमपेक्षत"

इति न्यायेन रूपभेदोवक्तव्यो नचासाविहास्तीत्यर्थः। स्वपक्षसाधनार्थे प्रयुक्ते प्रसङ्गे विपर्ययपर्यवसानं वाच्यमात्माश्रयत्वं तु स्वपरपक्षबाधमात्रमतो न विपर्ययपर्यवसानापेक्षेत्याशङ्क्याह * नचेति * कुत इत्यत आह * स्वयमिति * अस्य प्रसङ्गस्य मूलतया व्याप्तिरभ्युपगम्यते नवा, नचेन्मूलशैथिल्यात्तर्काभासता। स्यादेतत् परपक्षबाधने पराभ्युपगतामेव व्याप्तिमुपजीव्य प्रवृत्तस्य न मूलशैथिल्यमिति। मैवम्। स्वपक्षसाधनत्वेनापि काचिदाश्रीयमाणतया व्याप्त्यभावे मूलशैथिल्यं स्वयं

व्याप्त्यनभ्युपगमेऽन्यतरासिद्धस्यापादकस्याभासत्वाच्च। यदि व्याप्तिरभ्युपगम्यते तया प्रसञ्जितस्यानेकत्वादेर्निषेधे तद्व्यतिरेकस्यैकत्वादेः प्रमाणिकत्वस्यावश्यमन्तव्यत्वाद्व्यतिरेकप्रमाणमन्तरेणान्वयानिश्चयानुपपत्तेरन्यत्रानुमानादित्यर्थः ।

एतदेतन्न स्यादिति न प्रसञ्जयामः, किन्त्वेतस्मादन्यदिति प्रसञ्जयाम इत्याशङ्क्योक्तन्यायं तत्राप्यतिदिशति ।

१३८ प्रकारान्तरेऽपि दूषणातिदेशः ।

अतएवैतदन्यत्स्यादित्यपि न शक्यप्रसञ्जनमेतदन्यत्वस्यैतत्स्वरूपभेदमादायैव प्रतीतिपर्यवसायितया प्रसङ्गे व्याघातादेव । विपर्ययोऽप्येतद्विशेषितान्यविशेषितान्यत्वविधायिनो विशेषणाविशेषणताप्रविष्टमात्मानमात्मनि विधीयमानं न क्षमते- एतदनन्यत्वस्यैतदन्यान्यत्वस्यैतत्त्वादेव, अन्यत्वावधेरात्मन उपलक्षणत्वे चान्यत्वमात्रमुपलक्ष्यमाणमन्यस्मादप्यन्यत्वमादाय पर्यवस्येत् । स्वरूपत एव विलक्षणमन्यत्वविशेषमवधि रात्मोपलक्षयतीति च न घटते यतोऽन्यत्त्वमात्रमेवावधिविशेषैरुपधीयमानं तदन्यत्त्वप्रत्ययव्यवहारोपपादकं भवदन्यत्वव्यक्तिभेदपर्यन्तगमनं प्रमाणस्य न सहते । यदि चान्यत्वव्यक्तिभेदोऽपि स्यात्तथाऽपि प्रसङ्गमूलभूता व्या-

तिः सामान्याकारपुरस्कारित्वादेतेनैवोपधीयमानानामन्यत्वव्यक्तीनामैक्यमादाय प्रवृत्ता तथैव प्रसङ्गे विपर्यये चोपनयन्ती स्यादेवोक्तदोषालङ्घनायेति ।

*अत इति* अतः शब्दार्थमेव स्पष्टयति *एतदिति* यद्येतदेतदाश्रयादि स्यात्तर्ह्येतदन्यत्स्यादिति प्रसञ्जने कस्मादन्यदित्याकाङ्क्षायामेतस्मादन्यदिति स्वरूपभेदमादायैव प्रतीतिपर्यवसायी प्रसङ्गोवाच्यस्तथाचैतद्भवति न भवति चेति व्याघात इत्यर्थः। एवं प्रसङ्गरूपं निरस्य विपर्ययपर्यवसायित्त्वमपि निरस्यति*विपर्यय इति*एतदन्यत्स्यादिति प्रसङ्गस्य विपर्ययो भवति चैतदनन्योऽयमित्येवं रूपो वक्तव्यस्तथाचैतद्विशेषितं यदन्यत्वं तद्विशेषितान्यत्वमेतदनन्यत्वं तद्विधायिनः –तत्सकाशाद्वाक्यादात्मानं विशेषणविशेषणतया प्रविष्टमात्मानमात्मनि विधीयमानं वस्तु न क्षमत इत्यर्थः । एतदन्यन्न भवतीति विधाने एतद्विशेषितमन्यत्वं यत् तदन्यत्वं विहितं भवति, तत्र विधेयान्यत्वस्य विशेषणमेतद्विशेषितान्यत्वं तत्र एतद् विशेषणमिति योजना। कुतो न क्षमत इत्यत आह * एतदिति * स्ववृत्तिविरोधादित्यर्थः । कीदृशं तदेतदनन्यत्वमित्यत आह * एतदन्यान्यत्वस्येति * एतस्मादन्यदित्यत्र विशेषणतया प्रविष्टमवधिस्वरूपं न भवति किन्तूपलक्षणमतो यदुक्तमेतत्स्वरूपविशेषितान्यत्वविधान एतत्स्वरूपस्यैवोद्देश्यस्य विधेयत्वेन प्रवेशोविपर्ययस्त-

न्न भवतीति, तदनङ्गीकारपराहतमित्याशङ्क्याह * अन्यत्वेति * यदि घटोघटाधारः स्यात्तर्हि घटो न स्यादित्यत्र घटस्योपलक्षणत्वादन्यत्वमुतान्यस्मादन्यत्वं विधेयं भवति तच्च न सम्भवति घटस्य यतः कुतश्चिदन्यत्वात्तथेष्टापादनं चान्यस्मात्पटादन्यत्वस्य स्वीकारादित्यर्थः । स्वरूपत एवान्यत्वतो विलक्षणत्वादन्यत्वादन्यत्वमात्रमुपलक्ष्यन्न भवति किन्तु घटान्यत्वमेव घटेनोपलक्ष्यमित्याशङ्क्याह * स्वेति * अन्यत्वं च तद्विधेयान्यत्वस्य विशेषणं । कुतो न घटत इत्यत आह * यत इति * अन्यत्वं स्वरूपतो भिन्नमित्यत्र किं प्रमाणम् । अन्यत्वविषयभिन्नप्रतीतिव्यवहारानुपपत्तिरिति चेन्मैवम् । अन्यथाप्युपपत्तेः यथाऽऽकाशस्य घटमणिकाद्युपाधिभेदाद्भिन्नत्वमेव भिन्नप्रतीत्याद्युपपादकमेवमेकमप्यन्यत्वं त्तत्तदुपाध्युपरक्तविलक्षणप्रतीतिजनकमिति सम्भवादित्यर्थः । अन्यत्वव्यक्तिभेदमङ्गीकृत्याप्याह * यदीति * अङ्गीकृतेऽपि तद्विशेषितान्यत्वव्यक्तिभेदे व्यक्तिभेदस्य व्याप्तिग्रहणानुप्रवेशासम्भवाद्यदेतदेतदाश्रयादि स्यात्तदेतदन्यत्स्यादिति सामान्याकारेणैव व्याप्तिग्रहसम्भवादेतद्विशेषितान्यत्वापादने स्यातामेव व्याघातविपर्ययतात्विकत्वे इत्यर्थः । एतेनैवोपधीयमानानामिति—सामान्याकारसङ्गृहीतानामित्यर्थः। प्रसङ्गे—एतदाश्रयत्वादेतदन्यत्स्यादित्यत्र। सामान्यतोऽव्यापकमानयतीति धर्म्युपाध्ययोर्व्याघात इत्यर्थः। विपर्यये च एतदेतद्भवतीत्येकस्य विधेयोद्देश्यभावानुपपत्तिरित्यर्थः।

उक्तन्यायमन्यत्राप्यतिदिशति ।

१३९ अन्यत्रातिदेशः अन्योन्याश्रयचक्रकयोर्खण्डनं च ।

एवंप्रकारता चाऽऽश्रयाश्रयिभावत्वप्रकारान्तराश्रयेष्व-प्यात्माश्रयोदाहरणेष्वतिदिश्यते । अन्योन्याश्रयो यथा-भेदेनावगताद्भेदज्ञानोपगमे, सोऽपि त्वया कथङ्कारमु-पन्यसनीयः । न तावद्यदेतदेनद्बोधाधीनबोधं स्या-त्तदा न बुध्येतेति, तथासति व्याप्त्यसिद्धेः एतद्बोधा-धीनबोधं यत्तद्बोधाधीनबोधस्य तस्यैवादृष्टचरत्वात् । कया चन व्याप्यव्यापकभेदकल्पनया व्यभिचाराप्रतीतचर-त्वयोर्वारणेऽप्यतथाभावशङ्काखण्डकदण्डदुर्लभत्वात् । ए-वमन्योन्याश्रयान्तरेऽपि । चक्रकं च मध्ये परमन्तर्भाव्या-ऽऽत्माश्रयान्योन्याश्रयावेव विपरिणमत इति तद्दोषं नाति-क्रामति ।

* एवमिति * स्वस्मात्स्वयमुत्पद्यत इत्यङ्गीका-रे स्वजनकं स्वयमापद्येतेत्येवमाद्यात्माश्रयोदाहरणे भे-दाद्यापादनमादायोक्तखण्डनानि योजनीयानीत्यर्थः । एवमात्माश्रयस्य तात्विकत्वं निरस्यान्योन्याश्रयस्या-पि तात्विकत्वं निराकर्तुमुपक्रमते * अन्योन्येति * भेदेनावगतात्प्रतियोगिनः सकाशाद्धर्मिणो भेदज्ञानो-पगमे प्रतियोग्यन्यत्वासिद्धौ ततो धर्मिभेदसिद्धिस्त-त्सिद्धौ च प्रतियोग्यन्यत्वसिद्धिरित्यन्योन्याश्रयस्ता-

१ एतद्बोधाधीनबोधाधीनबोधं स्यादिति का० मु० पु० पा० ।

किं नैरुच्यते इत्यर्थः । एवमुपन्यासे काऽनुपपत्तिरित्यत आह * सोपीऽति * कथमिति * कीदृशं प्रसङ्गशरीरमित्यर्थः । एतत्–घटादिरूपं प्रमेयमेतस्य–घटादेः सकाशाद्भिन्नस्य प्रतियोगिनो बोधायत्तज्ञानं स्याद्यदि तर्ह्येनत् घटादिभेदरूपं प्रमेयं न बुध्यतेत्येवम्प्रकारस्तदुपन्यास इत्याशङ्क्याह *न तावदिति* कुत इत्यत आह *तथा सतीति* व्याप्त्यभावेन मूलशैथिल्यादाभासत्वं तर्कस्येत्यर्थः। तामेव व्याप्त्यसिद्धिमुपपादयति * एतादिति * अन्यत्र प्रतियोगिज्ञानाधीनज्ञानविषयो भेदो दृष्टो न वा, दृष्टश्चेन्न बुध्येतेत्यापाद्याभावादेव व्यभिचारः न दृष्टश्चेद्भेदाख्यधर्मिण एवासिद्धत्वात्तन्निष्ठतयाऽऽपाद्यापादकयोः सामानाधिकरण्यं न क्वापि दृष्टमिति व्याप्त्यसिद्धिरित्यर्थः । यद्वस्तु तत्परस्पराधीनबोधं न भवति यथा घटद्वयमिति सामान्येन व्याप्तिरिष्यते प्रतियोगिज्ञाने ज्ञानविषयभेदस्यादृष्टत्वान्न व्यभिचारो नचादृष्टचरत्वं दूषणं वस्तु चेत्परस्पराधीनबोधं न स्यादित्यनेन रूपेण प्रसङ्गसम्भवादित्याशङ्क्याह *कथाचनेति* वस्तुत्वं भवतु परस्परायत्तबोधत्वं चास्तु किं बाधकमित्यन्यथाभावशङ्कायाः खण्डकदण्डस्य दुर्लभत्वात् व्याप्त्यसिद्धौ मूलशैथिल्यं स्यादित्यर्थः। शङ्काखण्डकतर्कस्य मूलभूतव्याप्तेः प्रामाणिकत्वे तद्विषयस्यैव तर्कस्य व्याप्तिप्रमाणविषयत्वात्सोर्थः प्रामाणिकः स्यान्नच व्याप्तिर्मूलशैथिल्यमित्युक्तं खण्डनमन्यत्राप्यतिदिशति *एवमिति* आत्माश्रयादिखण्डनेन चक्रकं च खण्डितमित्याह *चक्रकं चेति*

आत्माश्रयान्योन्याश्रयावेव परिणमतश्चक्रकरूपेणे-त्यात्माश्रयादिदोषं नातिक्रामति चक्रकमित्यर्थः ।

व्याघातस्यासम्भवं दर्शयितुं तस्योदाहरणमाह ।

१४० व्याघातानवस्थाप्रतिबन्दीनां खण्डनम् ।

व्याघातस्तु यथा सन्नास्तीत्यत्र । तमपि कथं प्रयोक्ष्यसे यदि यद्ययं सन्न स्यात्तदानीमसन् स्यादिति । तर्ह्यसन्न स्यादित्यस्यापि सन्स्यादित्यस्मिन्नेवार्थे पर्यवसानादभेदेन व्याप्यव्यापकभावस्यैवाऽसिद्ध्यापत्तिः । स्वभावविरुद्धोपजीविनी च विरुद्धान्तरे तद्व्याघातनिरासादेव निरस्तप्राये । गौर्माहिषः ततो नभवति, अगवात्मतानियता यतोमहिषात्मतोति, एष हि तयोर्विरोधः । अनवस्थातु यथा सत्तायामपि सत्तान्तरमित्यनवधौ सत्ताप्रवाहे इष्यमाणे, तत्रकथं प्रत्यवस्थेयं, न तावद्यदि सत्तायां सत्ता स्यात्तदा न विश्रान्तिः स्यादिति, सत्तायां सत्ताभ्युपगमस्य विश्रान्त्यभावेन सह व्याप्तिसिद्ध्यसिद्ध्योर्दोषग्रस्तत्वात् । प्रतिबन्दीच खण्डितैव ।

*व्याघात* इति अयं व्याघातः कथं प्रयोक्तव्य इत्याह *तमिति* परस्तदुपन्यासप्रकारं शङ्कते *यदीति* व्याप्त्यभावान्मूलशैथिल्येनाभासत्वमिति परिहरति *तर्हीति* सन्निति चाऽसन्न स्यादिति च द्वाभ्यामेक एवार्थ उच्यते सदसतोः परनिषेधत्वादतोभेदाभावाद्व्याप्त्यसिद्धिः । व्याघातान्तरेऽप्युक्तन्यायमतिदि

शाति *स्वभावेति* स्वभावविरुद्धः व्यापकविरुद्धोप-
लब्धिश्च तयोरुभयोः स्वभावविरुद्धोपजीवकत्वमिति
पूर्वोक्तव्याघातनिरासादेव निरस्ते इति यावत्।अगवात्म-
त्वंहि गवात्मत्वेन स्वभावविरुद्धं,अगवात्मताव्याप्यं च म-
हिषात्मत्वं ततश्च व्यापकनिवृत्त्या व्याप्यनिवृत्तिरेवं च गो-
त्वेनागोत्वाभावापादनमगोत्वाभावेनच महिषत्वाभा-
वापादनं न स्यात्ततश्चापाद्यापादकयोरैक्यमिति याव-
त्।तत्रोदाहरणमाह *गौरिति* अयं गौस्तस्मान्महिषो
न भवतीत्यर्थः।अनयोर्विरोधं दर्शयति*अगवात्मतेति*
गोत्वमाहिषत्वयोर्विरोधे भावाभावविरोधस्योपजीव्य-
त्वात्तन्निरासेनैव तन्निरसनीयमित्यर्थः ।अनवस्थां दर्श-
यितुमुदाहरणेन दर्शयति*अनवस्थेति* कथमेषाऽनव-
स्था प्रयोक्तव्येत्याह*तत्रेति*सत्तायां यदि सत्ता स्यात्तदा
सत्ताविश्रान्तिर्न स्यादिति प्रयुज्यत इत्याशङ्क्याह *न
तावदिति* कुत इत्यत आह*सत्तेति*सत्ताभ्युपगम-
मात्रस्यापादकत्वं सत्तायां सत्ताभ्युपगमस्य वा, ना-
द्यो घटादावपि सत्ताभ्युपगमे तथात्वप्रसङ्गात् । द्विती-
ये तु सत्तायामेवाऽऽपादकस्य सत्वादन्यत्र च तस्या-
सत्वान्नियतसहचारस्य च व्याप्तित्वादविश्रान्तेर-
पि च यदि सत्तायां सत्ता तर्हि तत्रैव तेन सहचारस-
म्भवस्तथाच यदि व्याप्तिसिद्ध्यर्थं सत्तायामपि स-
त्ताविश्रान्तिमत्वं प्रमितं तदाऽनिष्टापत्तिरप्रमितं
चेत् व्याप्त्यभावान्मूलशैथिल्यमित्यर्थः । प्रतिबन्दी-
खण्डनं द्वितीयपरिच्छेदे कृतमित्याह * प्रतीति *

आत्माश्रयत्वांशे भङ्गान्तरमाह ।

१४१ आत्माश्रयान्योन्याश्रयोरदोषत्त्वम् ।

किञ्च प्रमेयत्त्वाभिधेयत्त्वव्यवहार्यत्त्वसन्निकर्षवत्त्वाभावप्रतियोगित्त्वादीनामात्माश्रितत्त्वदर्शनात् कथमात्माश्रयताखण्डिका व्याप्तिः सव्यभिचारा न स्यात् । द्वारव्यक्तिभेदस्याऽपि व्यभिचारिव्यतिरेकत्वात् । स्वप्रकाशवादिना स्वयमेव स्वज्ञानत्वस्य, एवमभावेऽप्यन्यमभावमस्वीकुर्वता स्वयमेव स्वाभावत्त्वस्य, एवं तदेव ग्राह्यं ग्राहकं चात्मप्रतीतौ, एवं तदेव ज्ञाप्यं ज्ञप्तिकारणं च शब्दो वाचक इत्यत्र, एवं तदेव नाश्यं नाशकं च प्रध्वंसिनि, एवं तदेव सम्बन्धि सम्बन्धश्च स्वभावसम्बन्धोपगमे, इत्यादि बहुलमुपगमादात्माश्रयतदाभासविवेकाय किं नियामकमुपेयम् । अन्योन्याश्रये चान्त्योपान्त्यशब्दयोरन्योन्यनाशकतायां, समव्याप्तिकयोश्चान्योन्यव्याप्यव्यापकतायां, एककार्यकारिणां चान्योन्यसहकारितायां, एवमन्यस्मिन्नपि तत्रतत्र दर्शनात्कथं न व्याप्तिभङ्गः । कश्च विशेषो यद्व्यतिरेको विशेषणमुपादीयेत । तत्रतत्राविरोधान्नैवमितिचेत् । न । अन्यत्र तथाभावादर्शनस्य विरोधाभ्युपगममूलस्याविशेषात् । तत्रतत्र तथात्त्वे प्रमाणसद्भाव एव विशेष इतिचेत् । तर्हि सर्वत्रानभ्युपगममूलं तथात्त्वे प्रमाणाभाव एवोपजीव्यो दूषणमिष्यतां कृत-

मन्योन्याश्रयेण व्यभिचरितदोषत्वेनेति ।

*किञ्चेति*प्रमेयत्वाभिधेयत्वव्यवहार्यत्वानां प्रमादिविषयत्वात् स्ववृत्तिरप्यापन्ना समवायः सन्निकर्षः तत्र तस्य सम्बन्धिना सह सन्निकर्षान्तरेण न सन्निकर्षः सम्भवति इति स एव समवायस्तेन स्वसम्बन्धिना सह सन्निकर्षः स, एवमभावप्रतियोगित्वस्यापि धर्मस्यान्योन्याभावप्रतियोगित्वमस्तीत्यभावप्रतियोगित्वेऽप्यभाव इति। प्रतियोगित्वादीत्यादिपदेन केवलान्वयिसाध्यसङ्ग्रहः । एतेषु आत्माश्रयत्वखण्डनी व्याप्तिः सव्यभिचारा स्यादित्यर्थः । सम्बन्धद्वारव्यक्तिभेदादात्माश्रयत्वपरिहारान्न व्याप्तेः सव्यभिचारत्वमित्याशङ्क्याह *द्वारेति*द्वारभेदादेर्व्यभिचारिव्यतिरेकत्वादेतस्य द्वारभेदादेर्योऽसौ व्यतिरेकः सोऽन्योन्याश्रयादेर्दूषणत्वव्यतिरेकत एव दूषणतोव्यभिचरति उदाह्रियमाणज्ञानेषु स्वप्रकाशाङ्गीकारस्थले यतो द्वारव्यक्तिभेदयोरभावेपि तत्रात्मान्योन्याश्रययोरदूषणत्वाङ्गीकारादभावविशिष्टस्यापि तत्रैव व्यभिचारोऽन्यव्यभिचारिविशेषणाविशिष्टस्याव्यभिचार इत्यर्थः । तान्येव व्यभिचारस्थलान्युदाहरति * स्वेति * सर्वस्यापि षष्ठ्यन्तस्योपगमादित्यनेनोपरि सम्बन्धः। घटतज्ज्ञानयोरेकैव ज्ञानव्यक्तिर्व्यवहारहेतुरिति न द्वारभेदोस्ति गुरुमते,एवमन्योन्याभावःसर्वत्रैकोऽत्यन्ताभावश्चेति पक्षेऽन्योन्याभावः पटो न भवति अत्यन्ताभावः प्रागभावादिर्नेति व्यवहारे द्वारभेदो नास्ति तयोरेव स्वस्मिन्परस्मिंश्च तथाव्यवहारकत्वादेवं

निरुपाधिकात्मज्ञाने स एव ग्राह्यो ग्राहकश्चेति द्वारभेदो नास्ति मानसवेद्यत्वपक्षे ग्राहकत्वमङ्गीकुर्वत इति शेषः। शब्दपक्षे शब्दस्यैव वाच्यत्वं वाचकत्वं चेति न द्वारभेद, एवं स्वरसभङ्गुरपक्षे स्वयमेव नाश्यं नाशकं चेति द्वारभेदो नास्ति, विषयविषयिणोः स्वभावः सम्बन्ध इति पक्षे स्वयमेव सम्बन्धी सम्बन्धश्चेति द्वारभेदोनास्ति। आदिपदेन भावलक्षणदृश्यत्वाद्युदाहार्यम्। एवं क्वचित ज्ञप्तौ क्वचित्स्थितौ क्वचिद्व्यवहारे द्वारभेदाभावेपि आत्माश्रयस्य दोषत्वानङ्गीकारदर्शनाद्विवेको दुर्लभ इत्यर्थः। व्याप्त्यसिद्ध्या प्रशिथिलमूलत्वमन्योन्याश्रयेपि तुल्यमित्याह *अन्योन्येति*अन्योन्याश्रये च कथन्न व्याप्तिभङ्ग इतिसम्बन्धः।तदुपपादनमन्त्योपान्त्यादि।उत्तरोत्तरशब्दोत्पत्त्या पूर्वपूर्वशब्दानां नाशे उपान्त्यस्यान्त्यशब्देन नाश्यत्वमन्त्यस्याप्युपान्त्येन नाश्यत्वमिति तार्किकासिद्धान्तस्तथाच कृतकत्वानित्यत्वयोरन्योन्यव्यापकतेति मीमांसकादेरपि मृद्दण्डचक्रकुलालादीनामन्योन्यसहकृतानामेककार्यजनकत्वमेवं ह्रस्वत्वाद्यपि द्रष्टव्यमतएवमादौ स्थलेऽन्योन्याश्रयस्य व्यक्तिभेदाभावेपि दोषत्वादर्शनादव्याप्तिरित्यर्थः। प्रसङ्गस्थाने आभासत्वद्योतकविशेषाभावेनापि लक्षणं विशेषणीयमित्यत्र यो विशेषो निर्दिष्टः सोपि दुर्भण इत्याह * कश्चेति * उक्तोदाहरणेषु विरोधोनास्त्यन्यत्र विरोधोस्ति तेन विरोधाविरोधावेव विशेष इति शङ्कते * तत्रेति * विरोधादर्शनस्यैव तदभ्युपगममूलत्वात्कचिदन्योन्याश्रया-

दौ विरोधेन दुष्टत्वं चेत्तर्ह्यत्रापि अन्योन्याश्रयादेर्वि-
रोधेन दुष्टत्वमदुष्टत्वं वा तुल्यमेव न्याय्यमर्थैकरूप्यं
दर्शनादर्शनयोरैकरूप्यौचित्यादिति परिहरति *नेति*
उक्तोदाहरणेषु तथात्वे प्रमाणमस्ति नान्यत्रेति प्रमा-
णभावाभावौ विशेष इति शङ्कते *तत्रेति* तर्ह्यन्यो-
न्याश्रयदर्शने सत्यप्याभासत्वज्ञानाय प्रमाणाभावो-
ऽवश्यं ज्ञेय इति स एव दोषाभावनसमर्थ उद्भाव्यो-
ऽन्यर्थमितरोद्भावनमिति परिहरति * तर्हीति *

चक्रकस्यापि दोषव्यभिचारदर्शनान्मूलशैथिल्यं
समानमित्याह ।

१४२ चक्रकव्याघातयोरदोषत्त्वम् ।

चक्रकेऽपि दुःखजन्मादिसूत्रोक्तादिषु व्यभिचारद-
र्शनादव्याप्तिः विशेषव्यतिरेकदर्शनदुःशक्यत्त्वं च । का-
र्यकारणभावस्य तज्जातीयतया नियतत्त्वेन व्यक्तिभेदस्य
चक्रकानन्तर्भूतत्वात् । व्याघातेऽप्येकस्यैव जनकत्त्वा-
जनकत्त्वे तथा । नच कालभेदादिर्विशेषो घटतत्प्रध्वंसा-
दौ कालभेदेऽपि तादात्म्यव्याघातोपगमादेव ।

* चक्रकेपीति *

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरा-
पाये तदनन्तराभावादपवर्ग"

इति न्यायसूत्रम् । तत्र दुःखादीनामन्योन्यव्यवहितद्वा-
रापेक्षस्यान्यापेक्षणस्याङ्गीकारान्नचक्रस्य दोषता । तथाहि
मिथ्याज्ञानसिद्धौ तत्कार्यरागादिदोषसिद्धिस्तत्सिद्धौ

च तत्कार्यधर्मादिप्रवृत्तिसिद्धिस्तत्सिद्धौ च तत्फलधर्मादिः सिध्यति ततश्च शरीरग्रहणं तस्माच्च दुःखीत्याद्यहंसुखीचेतिमिथ्याज्ञानं सिध्यतीत्येतच्चक्रकमर्थादुत्तरोत्तरापगमे तदनन्तरपूर्वापगमेऽपवर्गदर्शनेन दर्शितमित्यर्थः। एतच्चक्रकाभासमत्रादुष्टत्वद्योतकविशेषस्य व्यक्तिभेदस्य सम्भवाद्यत्र तु विशेषोनास्ति तत्रैव चक्रकस्य दोषत्वमित्याशङ्क्याह * विशेषेति * व्यक्तिभेदादेव दुःखादिषु चक्रकस्याभासत्वमित्याशङ्क्याह * कार्येति * कार्यकारणभावस्तावदन्वयव्यतिरेकावसेयस्तौ च व्यक्तिषु न सम्भवतोऽतिप्रसङ्गादतो दुःखादिजातीयेषु चक्रकवृत्त्या कार्यकारणभावेन वर्तमानेषु व्यक्तिभेदस्य चक्रकानन्तर्भावात्तमादाय न चक्रकपरिहार इत्यर्थः। व्याघातेपि दोषत्वव्यभिचारदर्शननिमित्तव्याप्त्यसिद्ध्या मूलशैथिल्यं समानमित्याह*व्याघात इति* तदुपपादनायैव व्याघातस्वरूपमाह *एकेति * तथा व्याघात इत्यर्थः। कालभेदादिवशात्तत्र व्याघाताभाव इत्याह * नचेति * कुत इत्यत आह * घटेति * घटतत्प्रध्वंसयोर्घटतत्प्रागभावयोश्च कालभेदे विद्यमानेपि घटः प्रध्वंसात्मक इति तादात्म्ये व्याघातोपगमादित्यर्थः।

यच्च व्याघाताविशेषेपि सत्प्रतिपक्षात् जात्युत्तरस्य वैलक्षण्यमुक्तमुदयनादिना तत्प्रसङ्गान्निराचष्टे।

१४३ प्रसङ्गादुदयनमतनिरासः।

सत्प्रतिपक्षजात्योश्च को विशेषो व्याघाते, येन पू-

१ पूर्वत्रेति–सत्प्रतिपक्ष इत्यर्थः । सत्प्रतिपक्षे हि द्वयोरपि हेत्वोरविशेषेणैव बाध्यबाधकभावो जातौ तु जातिरेव बाध्या न तु तया स्थापनीहेतुरपि बाध्यत इत्यत्र किं विनिगमकमिति व्याघातविशेषे कथय कथमिदं वैषम्यमिति गुरूपदिष्टोऽयं दोषो नतु मयोदित इत्यर्थः । ननु सत्प्रतिपक्षहेत्वोर्व्याप्तिपुरस्कारात्साधकत्वं जातेश्च तदपुरस्कारादसाधकत्वमित्येतदधीनमेव वैषम्यमित्याशङ्क्याह * यद्यपीति * इदं वैषम्यमतन्त्रं यतस्तुल्यबलप्रतिहेतुप्रतिहतत्वात् यथा सत्प्रतिपक्षः परं व्याहन्ति तथा स्वात्मानमपि व्याहन्त्येवेति स्वव्याघातकत्वस्य तुल्यत्वादित्यर्थः * दूषणत्वार्थमिति * न नित्यः शब्दः कृतकत्वादिति प्रयुक्ते यथाऽनित्यत्वसाधर्म्यात्कृतकत्वादनित्योऽयं तथा नित्यत्वसाधर्म्यान्निःस्पर्शत्वान्नित्य एव किं न स्यादित्ययं प्रत्यवस्थानप्रकारः इदमसाधकं नियमानपेक्षप्रतिधर्मप्रतिहतत्वादित्यत्रैव पर्यवस्यति । अस्य च साक्षादेव स्वव्याघातकत्वं सत्प्रतिपक्षे साधारणप्रतिहेतुरुपन्यस्तः न साक्षादेव स्वात्मानं व्याहन्ति किं तर्हि तदुपन्यासानन्तरमसाधकतासाधनार्थं प्रतिहेतुप्रतिहतत्वं यदुच्यते तत्तत्परम्परयेति वैषम्यमित्याशङ्क्याह * साक्षाद्वेति * यद्यपि प्रतिहेतुप्रतिहतत्वे प्रतिहेतुप्रतिहतत्वं न सम्भवति नियमानपेक्षप्रतिधर्मप्रतिहतत्वे च नियमानपेक्षप्रतिधर्मप्रतिहतत्वं सम्भवतीति स्वाव्याघातकत्वं स्फुटमेव तथाऽपि प्रतिधर्मप्रतिहतत्वं स्वपरसाधारणमेवेति भावः । स्वव्याघातकत्वेसति सत्प्रतिपक्षताऽस्तु नियमपुरःसरा जात्युत्तरं च नियमानपेक्षत्वेसतीति तदसदुत्तरमित्याशङ्क्याह * नचेति * उभयोरपि व्याप्तिपुरस्कारेण सत्प्रतिपक्षतायां नियमत्वानियमत्वविरुद्धधर्माध्यासइत्याह * यत इति * ननु विरुद्धयोरध्यासे विरोध एव तयोर्नभवेत् विरोधित्वाध्यास एकत्रेति शङ्कते * तयोरिति * तर्ह्यन्यत्र विरुद्धत्वं विरुद्धत्वांशे वा विरुद्धत्वं नित्यत्वानित्यत्वयोरस्तुकोदोष इत्याह * नेति * ननु सत्प्रतिपक्षिताभ्यां नित्यत्वानित्यत्वयोरेकस्यापि न तत्र सिद्धिरसत्प्रतिपक्षितत्वस्य तन्त्रत्वादिति शङ्कते * स्यादप्येवमिति * प्रथमस्य समानबलप्रतिहेतुप्रतिहतत्वादसाधकत्वमिव द्वितीयस्यापि जात्युत्तरवत् स्वव्याघातकत्वमायातमिति परिहरति * तर्हीति * इति शाङ्करी व्याख्या ।

त्रैत्र बाध्यबाधकयोर्द्वयोरप्याभासत्त्वमुत्तरत्र तूत्तरस्य परं तथोपेयत इति गुरवः । यद्यपि प्रतिपक्षहेतुः साध्यान्तरसाधक इत्यस्ति तस्य जात्युत्तरवैधर्म्यं तथाऽपि त्वद्धेतुरसाधकः समबलप्रतिपक्षप्रतिहतत्वादित्यस्य दूषणत्वार्थमवश्यापेक्षस्य द्वारात्मव्याघातकत्वात्साक्षाद्वाऽवश्योपस्थाप्यद्वारेण वा स्वव्याघातकतायामुपयुक्तविशेषाभावः । नच तत्राऽऽस्तामेव व्याघातः सत्प्रतिपक्षता तु निरवद्यैवेति शक्यं वक्तुम् । यतः शब्दादेर्नित्यत्वमेकस्मादनित्यत्वं चापरस्मादनुमानात्तथा सति किं न स्यात् । तयोर्विरोधग्राहिणः प्रमाणस्य बलादितिचेन्न । यथा नित्यत्वमनित्यत्वमित्युभयमास्तामित्याचक्ष्महे तथा विरुद्धमविरुद्धं चास्तामित्यपि ब्रुवतोऽस्मान्कथं निवारयिष्यसि । स्यादप्येवं यदि सत्प्रतिपक्षत्त्वमेव तत्र दोषो नस्यादिति चे त्तर्हि मन्तव्यं प्रथमस्य हेतोः समानबलप्रतिपक्षप्रतिहतत्वादसाधकत्त्वमित्युक्तमावर्तते ।

*सत्प्रतीति* परैरभ्युपगतं विशेषं दर्शयति*येनेति*सत्प्रतिपक्षे द्वयोरप्याभासत्वं जातौ तूत्तरं यथा तु सद्वादिनाऽर्थक्रियाकारित्वात्सत्त्वमित्युक्ते सर्वमसत् ज्ञेयत्वादित्यादिकंस्यात् व्याघातकं किन्तु साध्यान्तरसाधकं पक्षधर्मतादिबलसम्भवाज्जात्युत्तरं तु सद्वा-

दिनाऽर्थक्रियाकारित्वात्सत्वमित्युक्ते सर्वमसत् ज्ञेयत्वादित्यादिकस्य व्याघातकत्वान्न जात्युत्तरात् विशेषसिद्धिरित्यर्थः । अवश्यापेक्षस्य द्वारेतिषष्ठी राहोः शिर इतिवदुपचारतः । जातौ साक्षात् व्याघात उपस्थाप्यते सत्प्रतिपक्षे तु परम्परयाऽतोऽनयोरपि अस्ति विशेष इत्याशङ्क्य स विशेषोऽकिञ्चित्कर इत्याह * साक्षादिति * उपयुक्तं दूषणत्वप्रयोजकं प्रतिहेतुप्रतिहतत्वमित्यर्थः । भवतु सत्प्रतिपक्षे व्याघातस्तथापि सत्प्रतिपक्षता निरवद्यैवेत्यत आह * नचेति * कुत इत्यत आह * यत इति * अनित्यः शब्दः कृतकत्वादित्यनुमानादनित्यत्वं, नित्यः स आकाशैकगुणत्वादाकाशमहत्ववदित्यस्मान्नित्यं च प्रसज्यते प्रथमेन द्वितीयस्य प्रतिहतत्वात्प्रथमः स्वसाध्यं साधयेदेव स्वेन प्रथमस्य प्रतिहतत्वादतश्च वाद्यभिमतसाध्यसिद्धिप्रतिबन्धकत्वाभावे कुतः सत्प्रतिपक्षता निरवद्येत्यर्थः । नित्यत्वानित्यत्वयोर्विरुद्धतया प्रमाणेन ग्रहणात् कथमेकस्मिन्धर्मिणि सिद्धिरास्तामिति शङ्कते * तयोरिति* व्याघातस्य दूषणत्वमनङ्गीकुर्वता यथा नित्यत्वमनित्यत्वं चैकत्रास्तामित्युच्यते तथा विरुद्धत्वमविरुद्धत्वं चास्तामित्यपि वक्तुं शक्यमिति परिहरति * नेति * सत्प्रतिपक्षलक्षणो दोषस्तत्र विद्यतेऽतस्तद्दोषग्रस्तत्वान्नित्यत्वादिसिद्धिर्नास्तीति शङ्कते * स्यादिति* प्रतिहेतोरपि समानबलप्रतिहतत्वाद्व्याघातकत्वं वाच्यं ततो न जात्युत्तराद्विशेषसिद्धिरिति प्रागुक्तदूषणं स्यादिति परिहरति * तर्हीति *

इदानीमनवस्थां दूषयति ।

१४४ अनवस्थानिरासः ।

अनवस्थायां च[1] यस्यां यस्यां सत्तायामपरापरसत्ता यायात्तस्यास्तस्याः प्रमाणेन सिद्धौ नानवस्था दोषः स्यादसिद्धौ चाश्रयासिद्धविषयमापादनमिति । यदि चाऽऽत्माश्रयादिषु सर्वत्र विशेषोऽयमभिधीयते प्रमाणसिद्धत्वात्तत्र तथोपेयत इति तर्ह्यापादनस्थाने तथाऽभ्युपगमाय प्रमाणं नास्तीत्युक्तं भवति तथाच तत्र प्रमाणप्रश्नस्यावसरो न प्रसङ्गस्येति ।

* अनवस्थेति * यस्यां यस्यां सत्तायामङ्गीकृतायां परापरसत्तास्वीक्रियते सा तत्र तत्र यदि प्रामाणिकी तदाऽनवस्था न दोषो यदि प्रमाणेन न सिद्धा तदास्याऽऽपादनस्याश्रयासिद्धत्वमित्युभतःपाशबन्ध इत्यर्थः । सर्वेष्वेतेष्वात्माश्रयादिषु प्रमाणसिद्धत्वासिद्धत्वलक्षणोविशेषोभ्युपेयत इति यत्र प्रमाणसत्वं तत्रात्माश्रयादेरदोषत्वं यत्र तु प्रमाणाभावस्तत्र दोषत्वमिति परोक्तं विशेषमनुवदति *यदीति* तर्हि यत्रयत्राऽऽपादनं तत्र-तत्र प्रमाणमस्ति चेत्तथाऽभ्युपगम्यते नास्तिचेन्नाभ्युपगम्यत इत्युक्तं स्यादिति परिहरति *तर्हीति* ततः

१ द्वितीयसत्तायां तृतीया तत्राऽपि चतुर्थी आपाद्या तत्राऽऽश्रयस्य द्वितीयसत्तादेः सिद्ध्यसिद्धिपराघातादनवस्था स्थातुमेव न पारयतीत्याह * अनवस्थायामिति * ।

किमित्यत आह *तथाचेति* आत्माश्रयाद्युदाहरणेषु प्रमाणमेव प्रष्टव्यं न प्रसङ्गः कर्त्तव्यः प्रमाणाभावभावयोरेव स्वीकारास्वीकारप्रयोजकत्वादित्यर्थः ।

इदानीमुपन्यस्तलक्षणस्याव्याप्तिं दर्शयंस्तर्कान्तराण्याह ।

१४५ तर्कान्तरप्रदर्शनपूर्वकलक्षणाव्याप्तिप्रदर्शनम् ।

अपरेऽपि विषयभेदात्तर्कभेदा आत्माश्रयादिवन्मन्तुमुचिताः । तद्यथा अविनिगमः उत्सर्गः, कल्पनागौरवलाघवे, चानौचित्यं चेति । विकल्पेनाऽन्वयावगमयोग्ये एकस्मिन्नभ्युपगते तदेकदेशान्वयनियमनिर्द्धारणाऽशक्यत्वमविनिगमः, सत्प्रतिपक्षहेत्वोरिव निर्द्धारयितुमशक्यान्वययोः परस्परप्रतिक्षेप एव पर्यवसानात् । नन्वन्यतरमादायाऽपि प्रकृतस्योपपत्तिसम्भवेनाविनिगमस्य दोषत्वमेवाऽनुपपन्नं केवलं पुंसस्तत्र यदि संशयः स्यात्स च किं न स्यादिति चेन्न । भावानवबोधात् प्रमाणासम्भवेन क्वचि-

---

१ भूतत्वमूर्तत्वयोर्जातित्वेनान्वययोग्यतायामुभयोर्जातित्वे जातिसङ्कर इत्येकतरं जातिस्तत्र विकल्पः किं भूतत्वं मूर्तत्वं वा जातिरतस्तत्रैकतरस्य जातित्वग्राहकं प्रमाणं विनिगमनाविरहः प्रतिबध्नातीत्यर्थः । ननु निर्द्धारणशक्यत्वमेव कथ स्यादेकस्य जातित्वसाधकमन्यस्य जातित्वं प्रतिबध्नातीत्यत्र विनिगमनाविरह एव तन्त्रमित्यर्थः भूतत्वमात्रस्यापि जातित्वाभ्युपगमे जातिसाङ्कर्यान्निवर्तते एवेति भूतत्वस्य जातित्वं सेद्धुमर्हत्येवापाततः नतु संशयमात्रं भवतीति शङ्कते * नन्विति * अन्योन्यप्रतिबन्धादेकमात्रानियतं प्रमाणमेव न भवतीति परिहरति * प्रमाणेति * ।

दपि विशेषः कथमभ्युपगन्तुं शक्यो यमादाय वस्तुगत्याऽप्येकस्याऽन्वयः स्यात् । नन्वेवं प्रमाणाभाव एव दोषः स्यान्नाविनिगम इति चेन्न । तस्याविनिगमोन्नेयत्त्वेनाविनिगमस्यैव प्रथमोत्पन्नस्योपन्यासौचित्यात् । नन्वेवमनुमाने व्यक्त्यविनिगमो दोषः स्यादिति चेन्न । तत्रानेकव्यक्तीनामभ्युपगमासिद्ध्यभावात्सामान्योपसंहारस्यैकामेव व्यक्तिमाक्षेप्तुं सामर्थ्यादविनिगमस्य चानेकाभ्युपगमे सत्युपस्थानादिति ।

*अपर इति* ते विशेषा मन्तुमुचिता अन्यत्रानन्तभावादित्यर्थः। विद्यमानास्तर्कास्ते के इत्यतआह *तदिति* अविनिगमस्य लक्षणमाह *विकल्पेनेति* पाक्षिकत्वेनान्वययोग्यं यत्रानेकमभ्युपगतं चेति तस्य मध्ये योसावेकस्तेन सह समन्वयनियमो यस्तदन्वयस्य निर्द्धारणं निर्णयस्तस्याशक्यत्वमितियावदिदमुदाहरणं भिन्नभेदविशेषाङ्गीकारे आद्यभेदसमानयोगक्षेमत्वादुत्तरभेदानां भिन्नेभेदिनि निवेशासिद्ध्यर्थमनन्तभेदस्वीकारे तेषां युगपदन्वयापत्तेः ते तावद्भेदा विकल्पेनान्वयाय न योग्यास्तेषाम्मध्य एकस्य भेदस्य तस्मिन्धर्म्मिणि निवेशनियमानिर्द्धारणमविनिगम इति । निर्द्धारणाशक्यत्वमित्युक्ते यत्किञ्चिन्निर्द्धारणाशक्यत्त्वे प्रसक्तिं निवारयति *नियमेति* तथापि द्रव्यस्य वा रूप्यत्वादिनियमानिर्द्धारणाऽशक्यत्वे प्रसक्तिं वारयति *अन्वयेति* साकाङ्क्षतापरिहाराय तत्

इति । तत्सर्वानिर्द्धारेण अतिप्रसक्तिनिवारणार्थैकेति ग्रहणम् । अयोग्यपदार्थानामन्वयनिश्चयात्यन्ताभावे प्रसक्तिनिवारणाय योग्येत्युक्तम् । अविकल्पेनान्वययोग्यास्तेषाम्मध्य एकस्य भेदस्य तस्मिन्धर्म्मिणि निवेशो दण्डचक्रादौ किं जनिते किंजनकत्वमिति निश्चयेऽतिप्रसक्तिं वारयितुं विकल्पेनेत्युक्तम् । अनेकेषामन्वययोग्यत्वे सति तेषां मध्य एकतममादायान्वयनिर्द्धारणं किं न स्यादित्यत आह *सदिति* सत्प्रतिपक्षहेत्वोः परस्परप्रतिक्षेपपर्यवसायितया निश्चयात्तेषामपि तदनिश्चयः प्रतिक्षेप एव पर्यवसानादिति यावत् । प्रतिहेत्वोः दोष एव न भवतीति शङ्कते*नन्विति* प्रकृतस्य भेदव्यवहारस्य किञ्चिद्भेदसम्बन्धमादायाप्युपपत्तेर्भेदविशेषान्वयनिर्द्धारणाभावेपि न कश्चिद्दोष इति नाविनिगमो दोष इत्यर्थः । अयमेवान्वयीति विशेषदर्शने सामान्यग्रहणादिप्रसूतः संशयदोष इत्याशङ्क्य स एव पूर्ववाद्याह* केवलमिति * अभिप्रायाज्ञानविलसितचोद्यमिति परिहरति * नेति * कोसौ भाव इति तमेवाभिप्रायं प्रकटयति * प्रमेति * कस्यापि भेदस्य धर्मिसम्बन्धे प्रमाणाभावाद्विशेषासिद्धिस्तदसिद्धौ सामान्यान्वयासम्भवाद्भेदव्यवहार एवानुपपन्न इत्यर्थः । प्राप्ताप्राप्ताविवेकेन सर्वत्राविनिगमस्थले विशेषान्वये प्रमाणाभाव एवोद्भाव्यत इति स एव दोषः स्यादिति शङ्कते * नन्विति * अतीन्द्रियत्वात् प्रमाणाभावोविनिगमेनोन्नीयते तथाच बाधवत्परस्फूर्तिकत्वात्तस्यैवोपन्यासो युक्त इति परि-

हरति * नेति * विशेषान्वयानिर्द्धारणं दोषश्चेद्ग्निमान्पर्वत इत्यादावपि पर्वतादौ वन्ह्यादिविशेषस्य विनिगन्तुमशक्यतयाऽविनिगमदोषः स्यादित्यतिप्रसङ्गबाधं शङ्कते * नन्विति * अनुमानेऽनेका व्यक्तयो नाभ्युपगम्यन्ते नातोऽविनिगमदोषोऽभ्युपगतविषयत्वात्तस्येति परिहरति * नेति * व्याप्तिबलागतसामान्यस्य पक्षसम्बन्धद्वारैव सर्वविशेषा आक्षिप्यन्त इत्यत आह * सामान्येति * उपसंहारः—सम्बन्ध इत्यर्थः । एकाभ्युपगमेपि विशेषान्वयानिश्चये किमित्यविनिगमो न स्यादित्यत आह * अविनिगमेति *

उत्सर्गलक्षणमाह ।

१४६ सोदाहरणमुत्सर्गलक्षणम् ।

बाहुल्यदृष्टमपेक्ष्य बाहुल्यदृष्टतया दुर्बलस्योपगमार्हतोत्सर्गः, तद्यथा—स्वस्थस्य जाग्रतो ज्ञानं प्रामाण्याप्रामाण्यनिर्द्धारकप्रमाणानुपनिपाताविशेषेऽपि त्विना बाधमप्रामाण्यमभ्युपगच्छन्तं प्रति स्यात् नतु प्रामाण्यं, यं तर्कमेतमालम्ब्याहुः—

"तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यत" इति ।

द्रष्टव्योदाहरणं चैतदीश्वराभिसन्धौ वेदप्रामाण्ये तथा,यथा न सौगतोऽपि विप्रतिपत्तुमर्हति । ननु बलवदेककोटिकः संशय एवोत्सर्गस्तत्कथं तर्कः स्यादिति

चेन्न । उत्सर्गस्य सम्भावनायाः स्वार्थस्थित्यनुकूलतयाऽवलम्ब्यत्वात्संशयस्य त्वनेवम्भावात् उत्सर्गस्यैककोटिनिष्ठत्वात्संशयस्य च कोटिद्वयावगाहित्वात् । एतेन संशयस्यैवैका बलवती या कोटिः सैवोत्सर्ग इति निरस्तम् । निर्णयोऽपि संशयस्यैव वस्तुनियतकारणजत्वरूपबलवती कोटिः स्यात् । स्यादप्येवं यद्युत्सर्गवन्निर्णयेऽपि संशयस्यानुस्यूतिः स्यात् इति चेन्न । उत्सर्गोदाहरणे उत्सर्गमाद्रियमाणैः संशयोच्छेदानुमतेरेव बाधाभावं सहकारिणमपेक्ष्योत्सर्गेणाथैंक्याभाव एव प्रमाणीभवनात् । तस्माद्यथाऽनवस्थादयो बाधात् दूषणत्वं त्यजन्तस्तदभावे दूषणानि भवन्ति तथोत्सर्गेपि तथैवेति ।

*** बाहुल्येति * कथितं दुर्बलस्यानुपगमार्हत्वं कल्पनागौरवेऽप्यस्ति तदर्थं दृष्टतयेत्युक्तं । दृष्टस्य च दुर्बलत्वमेव न सम्भवतीत्यसम्भवपरिहारायोक्तं *बाहुल्येति* उदाहरणनिष्ठतया दर्शयति *तादिति* जाग्रतो– निर्दुष्टाच्चस्य तवतत्ज्ञानन्तत्प्रामाण्याप्रामाण्ययोर्निर्द्धारकप्रमाणाभावेपि प्रमाणानामेव ज्ञानानां बहुलमुपलम्भात् ज्ञानाप्रामाण्याभ्युपगमस्य दुर्बलत्वं तेन विनैव बाधकं प्रमाणाभ्युपगमादुत्सर्गबाधकादन्यथात्वं स्यादित्यर्थः । अस्मिन्नर्थे भट्टपादसंमतिमाह * यमिति * शुक्तिरूप्यादिबुद्धेर्बोधात्मकत्वेनोत्सर्गतः प्राप्ता प्रमाणता साऽर्थान्यथात्वज्ञानाद्**

बाधात्कारणदोषज्ञानाद्वाऽपोद्यत इति वार्त्तिकार्थः। सुगतमते प्रमाणानां स्वत एवाप्रामाण्यान्न तान्प्रतीद्मुदाहरणं युक्तमित्यत आह *द्रष्टव्येति* तर्क आहार्यारोपरूपमेककोटिज्ञान, मुत्सर्गस्तु बलवदेककोटिज्ञान, "मुत्सर्गस्तु बलवदेककोटिकः सन्देहो बाहुल्येनोपलम्भना" दित्युक्तत्वात्तत्कथं तस्य तर्केऽन्तर्भाव इति चोदयति *नन्विति* वैषम्यप्रदर्शनेन परिहरति *नेति *स्वस्थस्य जाग्रतो ज्ञानं यदि स्यात्तत्प्रमाणं स्यादिति सम्भावनारूपस्तर्कस्तेन स्वविषयास्थिसर्थमनुकूलतयापेक्ष्यत उत्सर्गः, संशयस्तु नैवामिति सम्भावनयापेक्षत्वलक्षणवैधर्म्यात् नानयोरैक्यमित्यर्थः । विषयभेदेनापि भेदमाह*उत्सर्ग इति *उक्तन्यायमन्यत्रातिदिशति *एतेनेति* बलवत्येका या संशयकोटिः सैवोत्सर्ग इत्येतदपि सम्भावनयाऽपेक्षत्वानपेक्षत्ववैषम्यान्निरस्तमित्यर्थः। उत्सर्गस्य संशयकोटित्वेऽतिप्रसङ्गमाह * निर्णयोपीति * संशयस्यैवैकालम्बिनी कोटिर्निर्णयः स्यात्तस्यापि नियमवस्तुकारणजन्यत्वबलोपेतत्वं निर्णयस्यैव कारणमिति वक्तुं शक्यत्वादित्यर्थः । निर्णयदशायां संशयानुवृत्त्यभावान्न निर्णयस्य संशयैककोटितोत्सर्गदशायां संशयानुवृत्तेस्तदेककोटित्वमुत्सर्गस्येति वैषम्यं शङ्कते * स्यादिति* उत्सर्गदशायामपि संशयाननुवृत्तिस्तुल्यैवेति परिहरति * नेति * हेतुमाह * बाधेति * यत्र बाधकं नास्ति तत्र बाधाभावं कारणमपेक्ष्योत्सर्ग एव तस्यार्थकोटौ प्रमाणं भवति यत इत्यर्थः।उक्तमर्थं दृष्टान्तेनोप-

पादयन्नुपसंहरति*तस्मादिति*बाधे सत्यनवस्थादयः क्वचिदाभासतां गच्छन्तोऽपि यथा बाधाभावे दूषणानि भवन्ति तथा बाधे सति क्वचिदप्रमाणं भवन्नप्युत्सर्गस्तदभावे तथैव प्रमाणमेवं स्यादित्यर्थः ।

कल्पनागौरवस्य लक्षणमाह ।

१४७ सोदाहरणकल्पनागौरवलक्षणम् ।

सुगमासुगमयोरसुगमदुर्बलत्वं कल्पनागौरवं, दृष्टजातीयमपेक्ष्यादृष्टजातीयं दुःखेन प्रमीयते स्वल्पमपेक्ष्य च बह्विति अखिलजनानुभवसिद्धमेतत् । दर्शितं च विविच्येदमीश्वराभिसन्धौ यथा नैयायिकादिकं प्रति क्षित्यादिषु प्रतिकार्यं कर्तॄणां भिन्नानामभ्युपगमापादके, यथाच सौगतं प्रति प्रत्येकं कारणानां समर्थानामनेकसमानदेशकालानेकनीलादिव्यक्त्युत्पादापादके चेति दूषणानुकूलमिदम् । तद्व्यतिरेकेण कल्पनालाघवं साधनानुकूलम् ।

*सुगमेति* सुगमासुगमयोर्मध्येऽसुगमस्य यत् दुर्बलत्वं तत्कल्पनागौरवमित्यर्थः।उत्सर्गेऽतिव्याप्तिपरिहारायासुगमेत्युक्तं। उक्तदुःप्रतिपाद्यसोपाधित्वव्युदासार्थं सुगमेत्युक्तं तदुदाहरणेन दर्शयति *दृष्टेति* अध्ययनविधेरर्थावबोधे दृष्टे फले संभवत्यदृष्टमसुगमं तथाऽन्यान्वयिनि व्युत्पत्तिप्रयोजके सम्भवति कार्यान्वयान्वयिनीतिप्रयोजकमसुगममित्यर्थः । आदिपदेन संनिहि-

तादि द्रष्टव्यं। एतदेवोदाहरणनिष्ठतयाऽन्यत्र दर्शितमित्याह *दर्शितं चेति* किं तदुदाहरणमित्यत आह *यथेति* क्षित्यादीनां सकर्तृकत्वेपि बहुकर्तृकत्वं किं न स्यादित्यापादके कल्पनागौरवदूषणं दर्शितं नैयायिकैः। कार्यैः समानौ देशकालौ येषां तान्यनेकदेशकालानि कारणानि तेषामनेकनीलादिव्यक्त्युपपादके तर्के एकैकस्मात्पूर्वभाविनः सर्वस्माद्वा सर्वं किन्न स्यात्पूर्वभावित्वं चेत्प्रयोजकं प्रत्येकं समर्थानां कारणानां कारणत्वं इति बौद्धं प्रत्यापादने च गौरवमित्यर्थः। गौरवस्योपयोगमाह * दूषणेति * इदं—कल्पनागौरवं परपक्षदूषणानुकूलमित्यर्थः । गौरवान्तरस्योपयोगभेदं लक्षणंचाह *तदिति* तदुपयोगमाह *साधनेति*

अनौचित्यलक्षणमाह।

१४८ सोदाहरणमनौचित्यलक्षणम्।

प्रामाणिकाव्यवहार्यत्वमसमाधेयजातीयमनौचित्यं वैयात्यनामकं, तस्यभेदाः प्रश्नवैयात्यादयः। प्रश्नविषयमप्रमिण्वतां प्रष्टरि प्रश्नानौचित्यं प्रश्नवैयात्यं, यथाऽत्रस्तुनि विधिनिषेधयोः किमिच्छसीति पृच्छति प्रमाणव्यवहारिणां सौगते । अतएवातानौचित्यापरनामकं वैयात्यं परस्य दोषं मनसि कृत्वैके ब्रुवते अत सहृदयानां मूकतैवोचितेति। अपरे च नह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः स्यादिति। यदि चेदमनौचित्यं नाम दोषो नाभ्युपेयते तदा-

नीमर्थान्तरेण प्रकृतमर्थं निरस्यार्थान्तरस्यार्थान्तरेण परिहारात् तत्परम्परामालम्बितुकामः केन दोषेणार्थान्तरपरिहाराभासत्ववादिनि अर्थान्तरेणैव तत्परिहरणमनुचितमित्यतोऽन्येन जीयेत । अर्थान्तरनिग्रहतायां विप्रतिपन्नोऽपि प्रश्नपरम्परामालम्ब्य स्वभङ्गभयात्कथाऽवसानमनिच्छन्तं कथं जयेत । नचाऽनवस्थया जयतीति वाच्यम् । यावदुत्तरमर्थान्तरेण परिहरणे प्रश्नान्तरेण वा द्वयोरप्यनवस्थासाम्यात् ।

"दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तमहिमा महिमाऽऽदृत" ॥

*** प्रामाणिकेति * प्रामाणिकानां यद्व्यवहार्यं सर्वथैव समाधातुं न शक्यते च तदनौचित्यं । प्रमाणव्यवहारिणं प्रत्यव्यवहार्यत्वं सतोऽप्यज्ञानदशायां सम्भवति तद्व्यावृत्त्यर्थमसमाधेयेत्युक्तं । सतितु प्रमाणप्रवृत्तौ समाधेयत्वसम्भवात्तदव्यवहार्यत्वं प्रतिक्रियार्हमित्यर्थः । लक्षणानुगमासिद्धये जातीयग्रहणं असमाधेयजातीयमनौचित्यमित्युक्ते शब्दोनित्यश्चाक्षुषत्वादित्यादावतिव्याप्तिस्तत्र स्वरूपासिद्धेरसमाधेयत्वात्तद्व्यावृत्त्यर्थं प्रामाणिकाव्यवहार्यमित्युक्तं सा तु प्रामाणिकैर्व्यवह्रियतइति तद्व्युदासस्तस्य नामान्तरमाह *वैयात्येति* तद्विशेषानाह *तस्येति* प्रश्नवैयात्यस्वरूपमाह * प्रश्नेति * यत्र प्रश्नः प्रवर्त्तते**

तं विषयं येन प्रमित्सति तान्प्रति तस्मिन्विषये प्रश्नः स प्रश्नविषयो वैयात्यमित्यर्थः। अत्र दृष्टान्तमाह*यथे-ति*प्रमाणाव्यवहारिणां नैयायिकं प्रति विम वस्तुनि विधव्यवहारमित्याह* अत्रेति*सहृदयानां—पण्डिता-नामित्यर्थः। उदयनादिसंमतिरप्यस्तीत्याह * अपर-इति * वैयात्यं विना धाष्ट्यं विनेत्यर्थः। अनौचि-त्यं नाम दोष एव नास्ति तेन कथं प्रष्टुः पराजय इत्यत आह * यदि चेति * अनित्यः शब्दः कृतक-त्वादित्युक्ते विभुः शब्दः कथन्निष्पद्येत तदज्ञानात्त्वया कथं हेतुरुपन्यस्यत इति चोदितेऽर्थान्तरमितिपरिहृते तर्ह्यर्थान्तरस्य किं लक्षणमिति परम्परामवलम्बमानः केन दोषेण जीयेतेति सम्बन्धः। अर्थान्तरेण परिहार-स्याभासत्ववादिन्यर्थान्तरेणैव परिहरणमनौचित्य-मित्यतोऽन्येन जयो न स्यादित्यर्थः। उदाहरणान्तर-माह * अर्थेति * अर्थान्तरस्य निग्रहतायां योऽसौ विप्रतिपन्नः पुरुषोभवति स यदा प्रकृतस्यार्थस्य पर-म्परां कथानवसानमिच्छन्नवलम्बते तं प्रति विप्रत्ति-पत्तिविषयतयाऽर्थान्तरस्य वक्तुमशक्यत्वादनौचित्य-मेवोद्भाव्यत इत्यवश्याङ्गीकार्यमित्यर्थः। अर्थान्तरप-रम्परावलम्बनेऽनवस्थोद्भाव्या नत्वनुचितत्वमित्याश-ङ्क्याह * न चेति * कुत इत्यत आह * यावदिति * अनवस्थायास्तत्र तत्र परिहाराभिधानेपि समानत्वा-दित्यर्थः। अनौचित्यस्य दोषत्वे ग्रन्थकृतां सम्मतिमाह * दोषमिति * व्यक्तिविवेकोनाम काव्यालङ्कारस्त-स्मिन् ग्रन्थे महिमानामा ग्रन्थकारः अमुं प्रसिद्धमनौ-

चित्यं दोषमाहृत आहृतवान् । तमेव ग्रन्थं विशिनष्टि *कवीति*कविलोकः कविसमूहस्तस्य लोचनमिव लोचनं गुणदोषज्ञानहेतुत्वात्काव्यमीमांसिनोऽलङ्कारविचारकास्तेषु प्राप्तोमहिमा माहात्म्यं येन स प्राप्तमहिमा काव्यालङ्कारविचारणावसरे ह्रिणोमपास्यनौचित्य-दोषग्रस्तमिति तेन स्वीकृतमिति तात्पर्यार्थः ।

अवस्तुनि विधिनिषेधयोः किमिच्छसीतिपृष्टोवादी यदि मूकतामवलम्बते तदाऽप्रतिभा स्याद्यदि विधिनिषेधयोरसम्भवमवस्तुनि व्युत्पादयति तदाऽवस्तुनोपि व्यवहार्यत्वं स्वयं स्वीकृतं स्यादित्यपसिद्धान्तः स्वयमेव तत्र व्यवहारप्रवर्त्तनादित्यभिसन्धाय चोदयति ।

१४९ अनौचित्यंप्रामाणिकाव्यवहार्यत्वमवलम्ब्यशङ्का तन्निरासश्च ।

ननु कथमत्र प्रामाणिकाव्यवहार्यत्वमिति पृष्टेन यदि मूकत्वमालम्ब्य तथात्त्वं वादिनि न व्युत्पाद्यते तदानीमप्रतिभाऽऽपतेत्, अथ तथात्त्वं व्युत्पाद्यते प्रश्नार्थादेः प्रमाणाविषयत्वमुपन्यस्य, तदाऽत्यन्तासद्व्यवहार्यता स्वीकृतैव स्यादिति चेत् । अत्र ब्रुवते । मूकतैवात्र विजयायेति । नचा प्रतिभैवं प्रसज्येत उत्तरस्याऽप्रतिपत्तिरुत्तरार्हस्येति तल्लक्षणात् । यदि चायं नियमो वादिना इष्यते यदभ्रान्त्यैव तेन व्यवहर्तव्यमनुवादादन्यत्रेति, तदा मध्यस्थोद्भाव्यत्वमस्य दोषस्योपन्यस्यतां, मध्यस्थेन ह्यपभ्रंशभाषयाऽपि यथा वादिप्रबोधनं क्रियते तथा यद्यप्रमाणम-

वलम्ब्यापि क्रियते तदा को दोषस्तस्य स्यात् तत्र विषये तथैव तेन वादिबोधनस्य शक्यत्वात् । तस्मात् मध्यस्थं प्रत्यनुत्तरदानं स्वदोषपरिहाराय प्रतिवादिनापि वैयात्यलक्षणदर्शनं कार्यं, मध्यस्थं प्रति तस्याऽप्रमाणेनापि प्रतिबोधने निर्दोषत्वात् ।

* नन्विति * एतादृशि विषये मूकतैव ज्यायसीत्येकेब्रुवत इत्याह * अत्रेति * मूकतामवलम्ब्यावतिष्ठमानस्योत्तरस्याप्रतिभानाम निग्रहस्थानं स्यादित्यत आह * न चेति * कुत इत्यत आह * उत्तरेति * अत्रोत्तराप्रतिपत्तौ सत्यामपि उत्तरार्हेत्यस्य विशेषणस्याभावात्तद्विशिष्टलक्षणस्याप्यभाव इत्यर्थः । असद्विषयस्य प्रमाणायोग्यस्य भ्रान्तिं विना प्रतिपत्तुमशक्यत्वात् भ्रातयैव प्रतिपत्त्या व्यहर्त्तव्यं तन्न व्यवहर्तुर्वादिनोयुक्तं तेनाभ्रान्त्यैव व्यहर्त्तव्य मन्यत्रानुवादादिति नियमादतोऽनौचित्योद्भावनं स्यादित्याशङ्काह * यदीति * सदृष्टान्तमेतदुपपादयति * मध्यस्थेनेति * यथा मध्यस्थोऽपभ्रंशभाषयापि वादिनं बोधयति तत्र च न निग्रहस्तथा ऽप्रमाणनापि बोधने न तस्य निग्रह इत्यर्थः । मध्यस्थेन तत्र तथा व्यवहारानियम इत्यत्र युक्तिमाह * तत्रेति * उपसंहरति * तस्मादिति *

वादिभ्यामन्योन्यं, वादिनि वा मध्यस्थेन, मध्यस्थं प्रति प्रतिवादिना वादिना वाऽसद्व्यवहारस्वीकारेऽसत्ख्यातिः प्राप्नोति इति चोदयति ।

१५० असद्व्यवहारस्वीकारेऽसत्ख्यात्यापत्तिरितिशङ्कानिरासः ।

ननु वादिभ्यामेव वा वादिनि मध्यस्थेन वा, तं प्रति वादिना वाऽत्यन्तासद्विषये व्यवहारोपगमे कथं नासत्ख्यातिः स्वीकृता स्यात् । किं न स्यात् । विशिष्टरूपे सम्बन्धांशे चाऽसत्ख्यातेरन्यथाख्यातिवादिभिरप्यभ्युपगमात् । ननु वन्ध्यासुताच्छशविषाणं भिन्नमित्यादिषु व्यवहरतः कथं विशेष्ये विशेषणेऽपि नासत्ख्यातिरुपगन्तव्येति चेत् । न । असत्ख्यात्यभ्युपगमस्य सत्ख्यातित्वात्यागनियमोपगमाविश्रान्तत्वात् । असदपि सदुपश्लिष्टमेव प्रतिभासते न तु केवलमसत् कयाऽपि ख्यात्या समुल्लिख्यते इत्यन्यथाख्यातिवादिभिरिष्यमाणत्वात् । वन्ध्यासुताच्छशविषाणं भिन्नमिति प्रतिपत्त्राऽपि भिन्नमित्ययमंशः सामान्यतोऽन्यत्र दृष्ट एव प्रतीयते केवलं भेदस्य सदाश्रयः प्रतियोगि चेति यद्वस्तुतः तदसदाश्रयः प्रतियोगि च तस्येत्यन्यथा कृत्वा प्रतीयत इत्यन्यथाख्यातिरेवोपगता भवति । यथा तु विशिष्टमत्यन्ता ऽसदेव तथाऽऽश्रयप्रतियोगिनी अत्यन्तासती एव किं न प्रतिभासेते तावताऽपि यथोक्ताऽन्यथाख्यात्यनुल्लङ्घनादेव । नचैवमसत्ख्यातिवादिनाऽपि शक्यं वक्तुं, केवलं सदेव प्रकाशत इत्यस्मात्पक्षाद्विपरीतं वि-

शिष्टं सम्बन्धश्च क्वचिद्विशेषणाद्यप्यत्यन्तासदभ्रान्त्योल्लिख्यत इत्येवंरूपा तावदसत्ख्यातिः परेणोपगतैव। यदि तु सदपि प्रकाशते किञ्चित्तत्किं नासत्प्रकाशत इति। यतः परेण विकल्पः सर्वथा वस्त्वनुल्लेखी केवलमलीकमुल्लिखन्नसत्ख्यात्यात्मा स्वीक्रियते। यदि तु यथोक्तमेव परोऽप्यभ्युपगच्छति तदानीमनुमानप्रमाणादिवदत्राप्यविप्रतिपत्तिरेवेति।

* नन्विति * इष्टापत्त्या परिहरति * किमिति * इष्टत्वे हेतुमाह * विशिष्टेति * इदं रजतयोस्तादात्म्यं भ्रमविषय इति भट्टपक्षे विशिष्टांशे, रजतत्वेदमंशयोः समवायो भ्रान्त इति तार्किकमते संसर्गांश इत्यर्थः। असतोविशेषणाविशेष्यभावोऽवसीयते यत्र तत्र वैशिष्ट्यादिवद्विशेष्यादावप्यसत्ख्यातिः स्वीकार्येति चोदयति * नन्विति * असत्ख्यातिर्नाभ्युपगम्यत इति वाक्भङ्गा सत्ख्यातित्वापरित्यागनियमस्वीकारे विश्रान्तिर्विवक्षितेति परिहरति * नेति * असत्ख्यातिरतिरस्कृता चेत्कथं तर्हि सत्ख्यात्यपरित्याग इत्याशङ्क्याह *असदिति* वन्ध्यासुतशशविषाणयोरुभयोरप्यसत्त्वात्सत्ख्यात्यपरित्यागनियमोन सिद्ध्यतीत्यत आह * वन्ध्येति * कथं तर्ह्यन्यथाख्यातिरित्यत आह * केवलमिति * भेदस्यान्यत्र सदाश्रयत्वसत्प्रतियोगितया निष्पन्नत्वात्तत्परित्यागेनात्राश्रयत्वादि प्रकारान्तरेण प्रतीतमित्यन्यथा-

ख्यातिरित्यर्थः । धर्मिप्रतियोगिनोरसत्वात् भेदस्य त-दुपश्लिष्टतया प्रतिभासोऽनुपपन्न इत्याशङ्क्य वैशिष्ट्य-वत् सर्वथोपपन्न इत्याह *यथेति* तावतापि सदु-पश्लेषेप्यनियमापरित्यागादित्यर्थः । तर्ह्यसत्ख्यातिवा-दिनापि तथा वक्तुं शक्यमिति शङ्कायां अ-सत्ख्यात्यनभ्युपपादनायासत्ख्यातिवादस्वरूपं द-र्शयति * केवलमिति * सदेव प्रकाशत इति सत्ख्यातिपक्षस्तस्माद्विपरीतमिदं रजतमित्यत्र वि-शेषणं विशेष्यं सम्बन्धश्चेति सर्वं क्वचिदसदेव प्रकाशत इत्यर्थः । अस्तु प्रस्तुते किं स्यादित्यत आह * यदीति * इदमादि सदपि किञ्चित्प्रकाशमानं प्रतीयत इति सदुपश्लेषं विना परेणाङ्गीकृतासत्ख्या-तिर्न सिध्यति प्रकाशमानमाश्रयादि परेण विकल्प्यत इत्यर्थः । किञ्चित्सत्प्रकाशेप्यसख्यातेरसत्ख्यातिः किं स्यादित्याशङ्क्याधिष्ठानमारोपितं च सर्वमसदिति सिद्धान्ताविरोधादित्याह * सर्वथेति * प्रामाणि-कसिद्धान्ताङ्गीकारान्मयाप्येवमङ्गीक्रियत इत्याश-ङ्क्याह * यदित्विति * अनुमानप्रामाण्यवदिति * यथा तत्र विप्रतिपत्तिर्नास्ति तद्वदित्यर्थः ।

सर्वथैवासत्ख्यातिस्थलं वादी पूर्वं दर्शयति ।

१५१ असत्ख्यातिस्थलखण्डनम् ।

ननु सर्वथैवासत्ख्यातिरपि भवताऽनुमन्तव्यैव, त-थाहि—बन्ध्यासुतशशविषाणे कूर्मरोमैवेति वदतः शब्दा-दर्थं प्रतिपादयतां किं तदणुमात्रमपि समुल्लेख्यं तत्प्रती-

तेः इति चेन्न । तत्रापि तादात्म्यस्य सामान्यतोऽत्र प्रतीतस्यैवाऽसदुपहितस्य स्फुरणोपगमात्, प्रकारभेदवैशिष्ट्येन भिन्नयोरेकत्वं हि तादात्म्यं तच्चाऽन्यत्रास्त्येव तर्कसंशयाभ्यामप्रमाभ्यां जननेऽपि तत्तत्प्रमावत् मध्यस्थाद्यप्रमया तथा प्रश्नानौचित्यादिप्रमोत्पादनाविरोधे बाधवत् भ्रमविषयाऽतथाभावेऽपि भ्रमस्याप्रमात्वपारमार्थिकतावत्प्रश्नविषयासत्यत्वेऽपि प्रश्नानौचित्यसत्यतोपपत्तिरेव ।

***नन्विति* एवं विधभ्रान्तिरेव नास्तीत्यत आह* शब्दादिति*तादात्म्यस्यान्यत्र विद्यमानस्यैव प्रतीतेरसत्ख्यातिपरित्याग एवेति परिहरति * नेति * तादात्म्यस्यान्यत्र सत्वं दर्शयितुं तत्स्वरूपमाह *प्रकारेति* उपाधिभेदेन भेदाभेदयोरविरोधं दर्शयितुं प्रकारभेदेत्युक्तमुपाधिस्वगुणस्त्वादिस्ततः किमित्यतआह * तच्चान्यत्रेति * यद्यन्यथाख्यातिमङ्गीकृत्यतत्पक्षेपि व्यवहार इष्यते तर्ह्यप्रमाणिकाव्यवहारात्कथं परस्यानौचित्यं स्यात्प्रमाणस्यैव प्रमाजनकत्वं नियतमित्यत आह * तर्केति * तर्केण व्यभिचारशङ्कानिरस्याव्यभिचारिप्रमा यथा यथा च संशयोद्भावनेन गुरुणा शिष्ये बुद्ध्यातिशयजननात्तत्वप्रमा जन्यते तथ मध्यस्थं प्रत्यप्रमाणिकव्यवहारादनौचित्यप्रमेत्यविरोध इत्यर्थः । उदाहरणान्तरमाह * बाधवदिति * यथा नेदं रजतमिति बाधस्य प्रसक्तप्रतिषेधरूपस्य नियतपूर्व-**

भाविश्वसंज्ञनकजनकत्वेपि प्रमात्वं तद्वदनौचित्यादि-बुद्धेरपि प्रमात्वमित्यर्थः । विषयस्य प्रामाणिकत्वे भ्रमस्यानौचित्यं नाम धर्मः कथं विषयः स्यादित्याशङ्क्याह * भ्रमेति *

यद्यपि भ्रमस्य परमार्थः, तर्कसंशयाभ्यां यद्यपि परम्परया प्रमा जन्यते तथापि भ्रान्तिजाया धियः प्रमात्वं दृष्टपूर्वं नभवतीत्येतच्चोद्यं बाधदृष्टान्तेन स्निरस्तमित्याह ।

१५२ बाधदृष्टान्तेनभ्रान्तिजायाधियः प्रमात्वाभावशङ्कानिरासः।

एतेन भ्रान्तिजाया धियः प्रमात्वं तथाऽप्यदृष्टचरमित्यपि परास्तप्रायमिति । एवमन्यत्राप्येवंविधोदाहरणे वाच्यम् । नच कश्चिदुक्तप्रकारमन्यथाख्यातिसमाधानं नानुमन्तुं शक्नोति अन्यथा कथमसत्ख्यातिवादिनोमतमपि जानीया दज्ञात्वा च स्वपरमतवैचित्र्यं कथं वादे प्रवर्तेत। एते सर्वेऽपि तर्काः प्रमाणविरोधे वा प्रमाणाभावे वा निष्पीडिताः प्रविशन्तो न बाधासिद्धिभ्यां भिद्यन्ते पूर्वैरपि लोकसिद्धत्वाद्व्यवहृताः केवलमस्माभिरेव तर्कपदव्यामभिषिक्ताः ततो न प्रबन्धेन निरस्यन्ते। "विषवृक्षोऽपि संवर्द्ध्य स्वयं च्छेत्तुमसाम्प्रत"मिति ।

* एतेनेति * यत्र यत्र स्थले केवलमसत्प्रकाशत इति सुगता ब्रुवते तत्र सर्वत्रापि प्रदर्शितन्यायेन सदुपश्लेषो दर्शनीयं इत्याह * एवमिति * असतः

प्रतीत्यङ्गीकारेऽप्यन्यथाख्यातेर्यस्त्वानन्दशैनन्तस्सर्वैर-नुमन्तव्यं इत्याह * नचेति * विपर्यये बाधमुपन्य-स्यति*अन्यथेति*तदज्ञाने कोदोषस्तत्राह*अज्ञात्वेति* प्रदर्शितावितिगमादितर्काणां संक्षेपेण दोषमाह *एत इति*प्रमाणेन विरोधे निष्पीडिताः प्रविशन्तोबाधान्न-भिद्यन्ते प्रमाणाभावे प्रविशन्तोऽसिद्धितो न भिद्यन्त इत्यर्थः। लक्षणस्याश्रयस्याभावे प्रबन्धेनानिराकरणे च हेतुमाह *पूर्वैरिति* स्वयंस्थापितानां स्वयमेव नि-रासो न युक्त इत्यत्र वृद्धसंमतिमाह * विषेति * विषवृक्षः कारस्करः।

एवं तर्कानिर्वाच्यतामुक्त्वा तदाभासानिर्वाच्य-तामापादयितुमुपक्रमते।

१५३ तर्काभासानामनिर्वाच्यत्वोपक्रमः।

ये च परैस्तर्कदोषाः षट्स्वीक्रियन्ते आश्रयासिद्धि-रनुकूलत्वं मूलशैथिल्यमिष्टापादनं विपर्ययापर्यवसानं मिथो विरोधश्चेति, सोऽयं तर्कस्य दोषविभागो नोपपद्य-ते। व्याप्तिपक्षधर्मत्वयोः प्रतीतिमपेक्ष्य यथाऽनुमानं जायते तथैव तर्कोऽपि, इयान् परमनयोर्विशेषोयदनुमानं तयोः प्रमित्या जायते तर्कस्त्ववास्तवाभ्यामपि ताभ्यां पराभ्युपगममात्रसिद्धाभ्यां भवति, तेन विमृष्यमाणः तर्कः पराभ्युपगममात्रप्रसादसिद्धपरिकरो नाश्रयासिद्धिमपि तावद्वास्तवीमनुरोद्धुमधिकरोति ततः प्रमित्यभ्युपगम-

सिद्धिकृतवैचित्र्याश्रयाद्भेदादन्यो यावान् यथा च हेत्वाभासविभागः तद्वदेव च तर्काभासविभागोऽपि न्याय्यः तस्मादाश्रयासिद्धिमूलशैथिल्येष्टापादनान्यासिद्धिरेकैव दोषोऽनुमानवत्तत्राप्रमितत्वावलम्बिनीह त्वनभ्युपगमावलम्बिनीति विशेषः । मिथोविरोधश्च सत्प्रतिपक्षतैव । विपर्ययापर्यवसानं तु दोष एवापादनस्य न भवति यन्नाम विपर्ययापर्यवसानादापादनमात्मसाधनानुकूलं न भवति तदन्यदेव किमपि । बाधविरुद्धत्वव्यभिचारास्त्वनुमानवत् तर्केऽपि दोषाः पृथग्वाच्याः बाध उत्सर्गसम्भावनादिरन्यत्रानुकूलः । तर्कस्य सप्तममपि दोषं तर्कस्यापत्तिसाम्यं न नामोपगच्छामः स चोभाभ्यामभ्युपगतव्याप्येनानभ्युपगतव्यापकेन प्रागेव दर्शित इत्यास्तां विस्तर इति ।

*** येवेति * प्रमाणासिद्धापादनामिष्टापादनं प्रमाणसिद्धस्यापि परसिद्धान्तानुगुणस्यापादनमनुकूलत्वमिति विभागः। आक्षिपति*स इति*अनुपपत्तिं दर्शयितुं तर्कानुमानयोः साम्यमाह * व्याप्तीति * कस्तर्ह्यनयोर्विशेष इत्यत आह * इयानिति * व्याप्तिपक्षधर्मत्वप्रमितिरनुमयाऽपेक्ष्यते तर्कस्तु तयोरपरमार्थत्वेऽपि पराभ्युपगममात्रमित्यर्थः । ततः किमित्यत आह *तेनेति * आश्रयासिद्धिरपि न वास्तव्यपेक्ष्यत इति तद्बुद्धिरपि न वास्तवी स्यादित्यर्थः । ततोवा**

